S. 1

# अभिनवरागगोविन्दम्

( नूतनगीतसङ्ग्रहः )



डा० शिवप्रसाद भारद्वाज

# अभिनवरागगोविन्दम्

( नूतन-गीतसंग्रहः )

प्रणेता

**डा० शिवप्रसाद भारद्वाज**

शास्त्री, साहित्याचार्य, एम० ए०, एम० ओ० एल्०,

पी-एच्० डी०, साहित्य-रत्न,

प्राध्यापक

विश्वेश्वरानन्द विश्वबन्धु संस्कृत व भारत-भारती अनुशीलन-संस्थान

पञ्जाब विश्वविद्यालय

होशियारपुर

# प्रास्ताविकम्

सकलेऽपि विश्ववाङ्मये काव्यं नाम सहृदयहृदयावर्जकं किमपि सारस्वतं सारम् । चेतनाचेतनात्मकं भुवनं भावनाभावकतयाऽऽश्रयदपि हर्षशोकाविमानसभावभावितं तन्मात्रोपजीव्यं तदुपोद्बलकं चेति सुकुमारमिदं प्राणिनामन्तरङ्गरङ्गाक्रीडं जगदखिलभाषाप्रपञ्चमधिष्ठाय वर्तते । जनभावानां तरङ्गणं च नैकेनोपायेन साध्यत इति विविधास्तस्य विधा याः समाश्रित्य सुकवयः कृतार्थतां यान्ति । पद्यं, गद्यं, नाटकं, लघुकथाश्चम्प्वः, निबन्धाः, संस्मरणानि, व्यङ्ग्यलेखा इत्यनेके साहित्यप्रकारा अद्य परिनिष्ठतवाग्व्यापारे काव्यसंसारे प्रकाशिता अप्रकाशिताः प्रकाश्यमानाश्च दृष्टिपथमायान्ति, तेषु च सुकुमारतमं सद्यः प्राणिहृदयसन्दाननिदानम् उत्तरलभावलहरीलीलाललित्यमूलं भावनाविलोलनक्षमं च गीतिकाव्यमिति सकलविशेषविदां विदितचरं न पौनरुक्त्यमर्हत्येव । विश्ववाङ्मयमौलिमालामुकुलतामाकलयत् संस्कृतकाव्यं च न तेन विरहितम् । मेघदूतम्, भर्तृहरिशतकम्, शृङ्गारतिलकम्, अमरुशतकम् इत्यादीनि काव्यानि च्छन्दोबन्धाविदृशा काव्यान्तरसामान्यान्यपि भावनातरलानि सुतरां च तरलयन्ति जनमानसानीति समालोचकशीर्षण्यैर्गीतिकाव्येषु परिगणितानि । रागादिनिबद्धकाव्येषु सम्प्रत्यनुपलभ्यमानतया नातिप्रचुरेषु रामराघवप्रभृतिषु महाकविजयदेवप्रणीतं गीतगोविन्दं देशे विदेशेषु च भावप्रवणतया वाङ्माधुर्येणाऽसाधारणपदलालित्येन च लब्धप्रतिष्ठं न च तस्य वैशिष्ट्ये स्यात् कस्यचनाऽमत्सरिणो वैमत्यम् ।

परम् अद्यत्वे स्थितिस्तु विषमैव । यदा प्रायशोऽनधीतिनोऽपि भारतीया रागादिषु कृतपरिचया अभवन्, स्थाने स्थाने च संस्कृतसेविनां गोष्ठीषु, वैष्णवानां समाजेषु विविधतालग्राममूर्छनादिसङ्गीताङ्गानि गीतानि गीयन्ते स्म, तदा गीतगोविन्दगीतानां पद्यान्तराणां च यथोचितं रागादिविधानोचितं गानं संभवति स्म । विरलेषु च स्थलेष्वद्यापि संस्कृतप्रचारविरहिते काले यदा कदा भवति । किन्तु सम्प्रति शास्त्रीयसङ्गीतज्ञानां दिने दिने प्रविरलता जायते । चलचित्रप्रचारेण सह लोकस्य तत्र रुचिः प्रत्यहं क्षीयमाणा वर्तते ।

वर्तमानकाले संस्कृतं प्रति समाजस्यौदासीन्येऽपि सति तद्-गीतानि बहुधा जनेभ्यो रोचन्त एव। संस्थानेऽत्र प्रस्तूयमानेषु कार्य-क्रमेषु संस्कृत-काव्यावली-(कव्वाली) गानं प्रायेणाऽनधीतदेवगवीभिरपि श्रोतृभिरभ्यनन्दि। इतो गतैश्चाऽस्मच्छात्रैः प्राध्यापकपदमधितिष्ठद्भिः स्वसंस्थासु संस्कृतगीतानां कार्यक्रमा आयोजितास्तत्रत्येभ्यो नागरिकेभ्योऽप्यरोचन्त। एतत्साफल्यप्रोत्साहितैश्च स्वशिष्यैरहं बहुशोऽनुरुद्धोऽपि तादृशसंस्कृतगीत-सङ्ग्रहप्रकाशनाय कार्यान्तर-व्यापृतो नाऽपारयं तथा कर्तुम्।

इतश्च संस्कृतशिक्षार्थिनां संख्याया ह्रासं प्रतिवर्षं जायमानं सामान्य-जनस्य भाषामिमां प्रत्यौदासीन्यं दर्शं दर्शं व्यचारयं यथा संस्कृतनाटकैरिव गीतैरपि लोकस्य संस्कृतगिरि रुचिरुपादयितुं शक्यते। अतः पुरातनरीत्याऽभिनवया च विरच्य कतिचिद् गीतानि तेषां संग्रहः प्रकाशनाय प्रस्तुतीकृतः। किन्तु मुद्रणव्ययस्य नितरां वृद्ध्या कर्गलस्य महार्घतया च तस्य प्रकाशनं नितरां कठिनम् अनुभूतम्। संस्कृत-भाषायाः प्रचारं त्वभिलक्ष्य सहधर्मिण्या श्रीमत्या भगवानदेव्याऽस्य मुद्रापणस्य निश्चयः कृत एवेति सैवाऽस्य श्रेयसो भाजनम्।

अत्र कानिचिद् गीतानि रागादिपद्धत्या गेयानि। इतराणि च कव्वाली-गजलसदृशीर् उर्दूसाहित्यरीतीरनुसरन्ति। कतिपयानि च चलचित्रीय-गीतशैलीमनुरुन्धन्ति। सकलान्यपि तानि सुरुचिपूर्णान्यश्लीलादि-दोष-रहितानि चेति च्छात्रैश्छात्रीभिश्च निःसङ्कोचं गातुं शक्यन्ते। छात्रा विविधेषूत्सवेषु यथाऽवसरं गीतं गायेयुरिति तादृशान्यपि कतिचिद् गीतान्यत्र संग्रहे वर्तन्ते।

जातेऽपि प्रचुरे प्रकाशनव्यये सञ्चयश्छात्राः क्रेतुमिमं संग्रहं समर्था भवेयुरिति यथाव्ययम् एव मूल्यं निर्धारितम्।

एतस्मिन् कार्ये परामर्शदानादिना साहाय्यकृतो मम सहयोगिनः डा० वीरेन्द्रशास्त्रिणः, विश्वेश्वरानन्दविश्वबन्धुसंस्थानसञ्चालकाः शि० भास्करन् नायर महोदया अन्ये च सुहृदो धन्यवादानर्हन्ति। विद्वांसश्च गीतानाममीषां गुण-दोषनिवेदनायामन्त्र्यन्ते। सङ्ग्रहेऽस्मिन् संस्कृतसेविभिरभिनन्दितेऽपरोऽस्य भागो यथाकालं प्रकाशमेष्यतीति निवेद्य विरमति।

विदुषाम् आश्रवः
शिवप्रसादो भारद्वाजः

# विषय-सूची

# सरस्वती-वन्दना

१

(क)

## भारत-भारति ! जय वरदे !

भारत-भारति ! जय वरदे !
हर जडतामयि वदन-विलासिनि ! धेहि बलं बलदे ! ॥
(ध्रुवपदम्)

सकलशुक्लसङ्घात-सुरूपे ! शुक्लाम्बर-परिधे !
शुक्लाभरणसुशुक्लकुसुमचयनवपरिमलसविधे !
सुवरदे ! भारत-भारति ! जय वरदे ! ॥ १ ॥

त्वमसि सदा चैतन्यमयी मयि चारय चितममले !
हंसविहारिणि ! हंसीकुरु मे रसनं रसदकले ! ॥
सुवरदे ! भारत-भारति ! जय वरदे ! ॥ २ ॥

तिमिरमिदं विलयं नय मनसो मम ज्योतिर्झरदे !
उपवीणयं वदनेषु परिस्फुर वचसि नवस्वरदे ! ॥
सुवरदे ! भारत-भारति ! जय वरदे ! ॥ ३ ॥

निखिलज्ञान-विज्ञान-कलामयि ! भव शरणं महदे !
तनु करुणामसृणां दृशमाचर बहुविदस्मयि महिते ! ॥
सुवरदे ! भारत-भारति ! जय वरदे ! ॥ ४ ॥



२

## (ख) भारति ! वरदे !

जय हे भारति ! वरदे ! ।
कलय कृपामयि हंसविहारिणि हंसमिमं कुरु ते ।।
जय हे भारति ! वरदे ! ।। १ ।।

मसृण-पदे शरणं कुरु रसनं श्रुतिमुपसर सुखदे !
ज्योतिर्मयि ! प्रणुदान्धतमसमुरु ज्योतिर्नय भवदे ! ।।
जय हे भारति ! वरदे ! ।। २ ।।

असति निलयमयते हृदयं मे सति चारय महृदे !
मृत्यु-पथादमृतं गमयेमं प्रणतं जनममृते ! ।।
जय हे भारति ! वरदे ! ।। ३ ।।

अयि चिन्मयि ! मयि धेहि चितं शिवमाहर पुरु जगते ।
प्रचर कलाममलां सुकलामयि ! सत्यमयि ! क्षणदे ! ।।
जय हे भारति ! वरदे ! ।। ४ ।।



३

(ग)

## वन्दे भारतीम्

[ लय—वन्दे मातरम् ]

वन्दे भारती३म् ।
सरसां तरसान्तरमृगवागुरां३
भाव-बन्धुरां
भारतीं
वन्देऽऽऽ भारतीऽऽऽम् ॥ १ ॥

सर्वसौम्यां कलपदशालिनीम्,
भावपरिमलगुरुकृतिमालिनीम् ;
अनाकुलां रसगुणमञ्जुलां
माऽऽऽतरं
वन्देऽऽऽ भारतीऽऽऽम् ॥ २ ॥

ज्ञानमन्थरदुरापसुसारगभीरे !
अमरसबलचिरतरुणशरीरे !
शाधि मातः ! शुभवरदे !
चिन्मयीम्, कलामयीम्
हंस-वाहनां
माऽऽऽतरं
वन्देऽऽऽ भारतीऽऽऽम्
वन्देऽऽऽ भारतीऽऽऽम् ॥



४

## (घ) जयति जयति चिन्मयी········

जयति जयति चिन्मयी चिदंशहंसवाहिनी ।
कुटिलहृदयकलुषकालकल्मषौघदाहिनी ।। १ ।। (ध्रुवपदम्)

धवल-वसन-कुसुम-दाम-
कनक-रुचिर-रूप-धाम
तुहिनसितिम-भूषणाभिरामदेहधारिणी ।।
जयति जयति चिन्मयी चिदंशहंसवाहिनी ।। २ ।।

रसन-शरणमंह आशु
तिरयति विद्याकलासु,
क्षपयति या मोहपाशमुच्चभावभाविनी ।।
जयति जयति चिन्मयी चिदंशहंसवाहिनी ।। ३ ।।

तिमिरंहरणममृतदायि,
मह उदेतु तदनपायि,
स्फुरति सत्कलाशु येन केवल-प्रकाशिनी ।।
जयति जयति चिन्मयी चिदंशहंसवाहिनी ।
कुटिलहृदयकलुषकालकल्मषौघदाहिनी ।। ४ ।।



# अन्तर्लापः

५

(क) ## विनयः

माधव ! भव शरणम् ।
विषखल एष मनोभुजगो मम धेहि निजं चरणम् ॥ (ध्रुवपदम्)

असि करुणावरुणालय आतुरजनपालन ! नियतम् ।
कुरु करुणामयि देव ! विलपितं शृणु, परिहर दुरितम् ॥
दयालो माधव ! भव शरणम् ॥ १ ॥

दुर्मदकाम उदायुध उदितः खगणानुचरवृतम् ।
मानसमनिशमनाकुलमाकुलयति मदलोभधृतम् ॥
कृपामय माधव ! भव शरणम् ॥ २ ॥

विषयमहाविषमोहवशो ननु देव ! भजानि कथम् ? ।
विकिर दयामय ! दृष्टिमितो लघु येन भजे सुपथम् ॥
सद्गुरो माधव ! भव शरणम् ॥ ३ ॥

त्वं जननी जनकोऽपि च बन्धुः शिवदं ते स्मरणम् ।
तावकनामपदं श्रय एकं दुस्तरभवतरणम् ॥
प्रभो मम माधव ! भव शरणम् ॥ ४ ॥



६

(ख)

## प्रबोधनम्

मम मन ! एधि न तावदधीरम् ।
जगति कथं रमसे चल ! यल्लघु वहति यथा नदनीरम् ॥
(ध्रुवपदम्)

रतिरिह ते ननु वस्तुनि रूपिणि मरुसिकताजलभाने ।
युग-युगतो भ्रमसीह सखे ! तव तृप्तिमथापि न जाने ।
अशुचि मलायतनं, न हि विस्मर तृणकणपाति शरीरम् ॥
मम मन ! एधि न तावदधीरम् ॥ १ ॥

हरिचरणामृतपानमृते नहि याति तृषेयमनूना ।
परपीडाहरणादिह वरतरमस्ति न, भूरतिदूना ।
यदि सचसे दलितेषु सचस्व नु तव भविता तदुशीरम् ।
मम मन ! एधि न तावदधीरम् ॥ २ ॥

भजसि शुचं यदि बन्धुमृते, भुवि स्वीकुरु बन्धुविहीनम् ।
करुणमथासि प्रदर्शय करुणां यंचन पश्यसि दीनम् ।
द्रवसि निजे वृजिने, भुवने किमु क्रन्दति भवसि गभीरम् ?
मम मम ! एधि न तावदधीरम् ॥



७

(ग)

# मानसं प्रति

गाय मम मानस ! किमपि रे !
भावना यस्मिन् मनुजताया भवति फलिता सुविधुरे ।। (ध्रुवपदम्)

प्रेमगाथा चिरयुगादिह वर्णिता यूनां सुकविभिः ।
गीतप्राया युद्धलीला या कृता पूर्वं नृपतिभिः ।
अर्दितानामश्रु दृष्टं केनचित् ? त्वं स्मर तदपि रे !
गाय मम मानस किमपि रे !

पुस्तकानि तु तुन्दिलानि क्षितिभुजां विरुदावलीभिः ।
रञ्जिताः ककुभो न किं हतयोधशोणितवाहिनीभिः ।
हन्त ! हतपतिकाव्यथाया अंशमपि गीतेषु जप रे !
गाय मम मानस ! किमपि रे !

चन्द्रशालाश्चन्द्रचुम्बनचञ्चुरा गीताः स्वगीते,
कल्पना तव वैजयन्तविलोकनाय समुज्जिहीते ।
जीर्णमुटजं किं पुरःस्थं विस्मृतं ? चर्चय तदपि रे !
गाय मम मानस ! किमपि रे !

त्वं कविस्तव लोचनं कमनीयगामि सदेति जाने ।
किन्तु सत्यमसुन्दरं जगतीह तत् स्वल्पं न माने ।
काममादर्शे शिवं तस्मै यथार्थं नापलप रे !
गाय मम मानस ! किमपि रे !



स्नात

८

(घ)

## प्रताडना

मधुप भजसि रे ! दलदरविन्दम् !
स्मरसि कथं नो शयितमलिन्दम् ? ॥ (ध्रुवपदम्)

घनमकरन्दे रमसे सुमनसि, भवति च मन्दे न रतिं क्षमसे।
प्रीति-विरसता केयमरे ! ते ? त्यजसि सुमं यदि मुक्तमरन्दम् ॥
मधुप भजसि रे ! दलदरविन्दम्,
स्मरसि कथं नो शयितमलिन्दम् ? ॥

मिलदरेयं सरसिजकारा तव रतये यद् घनरससारा।
कीट ! न चैषा प्रीतिरुदारा, प्रेमपथं नाचर मलमन्दम् ॥
मधुप ! भजसि रे ! दलदरविन्दम्।
स्मरसि कथं नो शयितमलिन्दम् ? ॥

इन्दिन्दिर रे स्मरसि न रागं पयसि शफर्या असु-विरसायाः।
छलरहिता रतिरयि नहि लाभे चपल ! मनसि कुरु वचनममन्दम् ॥
मधुप भजसि रे ! दलदरविन्दम् ;
स्मरसि कथं नो शयितमलिन्दम् ? ॥



## (ङ) उपालम्भः

[ कज्जली* ]

मनो विनोदयसे कथं नु कामं मे ?
न किं बलादयि भावं करोषि वामं मे ? ।। (ध्रुवपदम्)

नदीव प्रावृषि विन्त्ते न वासना तीरम् ।
करोषि किं न सखे ! त्वं पथो विरामं मे ? ।। १ ।।
मनो विनोदयसे......

नरोऽर्चयन्ति सुरान् सिद्धये तु कामानाम् ।
रमे तु तत्र कथं यो दुनोति कामं मे ? ।। २ ।।
मनो विनोदयसे......

वदत्यनेकमिदं विश्वमङ्ग ! लोकोऽयम् ।
प्रियं किमेकलमस्मिन् लभेऽभिरामं मे ? ।। ३ ।।
मनो विनोदयसे......

यदन्तरस्ति कथं तस्य जायते लिप्सा ?
प्रियं दधासि च द्रष्टुं तनोषि कामं मे ।। ४ ।।
मनो विनोदयसे......

---

* गज़ल ।

नौ

यदक्षिगोचरमस्मिंस्तदन्तिके लभ्यम् ।
हृदि स्थितं न लभे दैवमङ्ग वामं मे ।। ५ ।।
मनो विनोदयसे……

निशा निजेश-कर-स्पर्श-लाभ उत्स्मयते ।
सुनिर्वृतेति किमस्यां तनोमि भामं मे ? ।। ६ ।।
मनो विनोदयसे……

तृषा मृषा कथमेषा भवेदनन्ताऽपि ? ।
नयने चेदरसे तं विना प्रकामं मे ।। ७ ।।
मनो विनोदयसे……

रमसे त्वं प्रियरूपे, सुवर्धसे चेतः ।
भजसेऽन्तर्ननु तं लोचनाऽभिरामं मे ।। ८ ।।

मनो विनोदयसे कथं नु कामं मे ? ।
न किं बलादयि भावं करोषि वामं मे ? ।।



१०

(च) **छलना**

[ लय—हाय ! दुनिया में मुझे कोई सहारा न मिला ]

छलना का न मनस्ते वद लोकेन कृता ?
तव साधारण कामे किमसूया न कृता ? ॥ १ ॥

जगतीमर्थयसे या स्वसुखे रे लीना ।
रमते या परपीडासु, स्वकष्टे दीना ।
सति दानेऽभिगता, हा प्रतिदाने तु गता ॥ २ ॥
छलना का………

किमये कामयसे शून्यदृशा तत्करुणाम् ?
कुरुषे जागरणे दृष्टिमथेमामरुणाम् ।
प्रणयोदारपथे कातरता नैव मता ॥ ३ ॥
छलना का न………

अधरे नोच्छ्वसितं नाऽपि दृशोरश्रुचयः ।
वचने नाऽनुनयश्चेतसि वा नाऽनुशयः ॥
अपि जीवापगमे कष्टकथां मा तु कृथाः ॥ ४ ॥
छलना का न………

रसना नाम रतिः प्रेयसि वृत्तिर्लीना ।
प्रतिमा चेतसि वा भावदृगन्नाधीना ।
पुरतः संनिहिते का नु वियोगस्य कथा ?
छलना का न………

न कुरु प्रीतिमये कष्टकरोऽयं पन्थाः ।
शयनस्याऽपि सुखं मेह कदाचिन्मंस्थाः ।
कुरुषे चेदथ कातरता नाऽत्र मता ।। ६ ।।
छलना का न.........

धरणी कामयते स्नेह-सुधां रे दीना ।
वितरोदारमते ! प्रीतिरियं स्यात् पीना ।
सुखिता सा यदि जायेत न किं ते सुखिता ? ।। ७ ।।

छलना का न मनस्ते वद लोकेन कृता ।
तव साधारणकामे किमसूया न कृता ? ।।



११

(छ)

## निवेदनम्

प्राण ! मम किमसि प्रतीपः ? ।
जीवनं त्वदधीनमयि मे त्वयि हितः प्रेमा प्रदीपः । (ध्रुवपदम्)

श्वास-रथमारुह्य त्वामसवो विचेतुं किं न याताः ।
कर्मणीह सधर्मिणी तेषामियं रजनी च जाता ।
भावनाऽऽह 'क्व मार्गयसि तं यो भवति तव हृत्समीपः' ।।
प्राण ! मम किमसि प्रतीपः ? ।। १ ।।

इन्द्रियैः पुरतो हितेन हृदार्ऽचितः सरति त्वमेकः ।
तारिकायां भुवनमोहन ! बिम्बितो लोके त्वमेकः ।।
अश्रु-सलिलैरदय ! परितस्तां त्वया रचितोऽन्तरीपः ।।
प्राण ! मम किमसि प्रतीपः ? ।। २ ।।



१२

(ज) **अनुनयः**

[ काव्यावली* ]

[ लय-तोटकं छन्द एवावृत्त्या ध्रुवे कव्वाली-रूपेण गेयम् ]

नियतं मम चेतसि संनिहितः
प्रिय ! किं नु तदेदं पीडयसे ?
उचितं न कदर्थनमस्य पुनः
स्वयमेव यदेदं नीडयसे ॥ १ ॥ (ध्रुवपदम्)

सुखा प्रेमानुभूतिर्मानसस्येदं परं शर्म,
पदेऽस्मिन् प्रेयसो जाते तदा शिष्येत किं कर्म ?
इदं कर्णेगतं कृत्वा तव प्रेमा मया क्रीतः,
अपूर्वां वेदनामादाय सुष्वापोऽपि विक्रीतः ॥
अयि मोहन ! मोहयसे भुवनं हृदयानि किमाहो क्रीडयसे ?
नियतं मम चेतसि संनिहितः प्रिय ! किं नु तदेदं पीडयसे ?

मनः श्वासायते प्राणेश ! तव सायुज्यमुपयातुम् ।
रसा नामानुषङ्गा लोचने त्वामातुरे पातुम् ।
श्रुतिः पादध्वनौ निःश्वासवाते चोत्सुका नासा,
त्वचा सुस्पर्शकामा, शेषकरणानां त्वमेवाऽऽशा ॥

* कव्वाली ।

नंनु वल्लभ ! वल्लभता तव का यदसूनपि मे त्वं चोरयसे ।
नियतं मम चेतसि संनिहितः प्रिय ! किन्नु तदेदं पीडयसे ॥

पुरो मे वर्तसे द्रष्टुं परं त्वामाकुला दृष्टिः,
परा भावाऽनुभूतिः किं व्यथायाश्चातुला सृष्टिः ।
न निद्रा किं पुनः स्वप्ने भवत्संयोगजाऽऽनन्दः ?
स्मृतिः पीयूष-निष्यन्दा, वियोगस्तापनोऽमन्दः ॥
सुख-दर्शन ! दर्शय मा-सदनं वदनं, किमु निर्दय ! नोदयसे ।
नियतं मम चेतसि संनिहितः प्रिय ! किं नु तदेदं पीडयसे
उचितं न कदर्थनमस्य पुनः स्वयमेव यदेदं नीडयसे ॥



# देश-भक्तिः

१३

## (क) भारत-वन्दना

जयति भरत-भू-ललाम विबुध-सदनहारि। (ध्रुवपदम्)
भुवन-हृदय-यमन-दाम,
सकल-सुजन-ललित-धाम,
त्रिदशकाममघ-विराम-मखिल-दुरित-हारि।
जयति भरत-भू-ललाम विबुध-सदन-हारि॥ १॥

तुहिन-शिखरि-मुकुट-वेश,
गह्वन-विपिन-रुचिर-केश,
सरिदुदारवेष! देश! जलधिरंघ्रिचारी।
जयति भरत-भू-लुलाम विबुध-सदन-हारि॥ २॥

घनजल-रवि-रश्मिजाल-
कनक-सवन-भूविशाल!
भारत! जय लोकभाल! किमसि दैन्यचारि?
जयति भरत-भू-ललाम विबुध-सदन-हारि॥ ३॥

जननि! वितर वीरभाव-
मखिल-कलुष-दैन्य-दाव-
मयि! ते तनयोऽस्तु दीप्त-दहन-नृत्य-कारी।
जयति भरत-भू-ललाम विबुध-सदन-हारि॥ ४॥



१४

(ख)

# भारत-महिमा

जय हे ! जय जय भारत हे !
गङ्गा-यमुना-सलिल-सुधाकण-
पूत-पवन-पुलकित-तनु-धारण !
खल-रिपु-वारण-कुम्भ-विदारण-
मृगपति-धारित हे !
जय जय भारत हे !
सप्तसिन्धु-लहरी-सरसान्तर
कुलगिरीन्द्रगरिमोर्जितप्रान्तर,
बहुविभूति-संभृत-देशान्तर,
प्रकृति-सुलालित हे !
जय जय भारत हे !
राम-कृष्ण-गौतम-जनि-दातर् !
महावीर-गाँधि-व्रत-रातर् !
पञ्चशील-मधुर-ध्वनि-प्रान्तर
शान्ति-सुधा-रत हे !
जय जय भारत हे !
दृष्ट-भीष्म-कर्णार्जुन-भुजबल,
चन्द्रगुप्त-विक्रम-लीलास्थल,
सत्-प्रताप-शिव-चम्पतिसुत-चल-
खड्ग-सुलालित हे !
जय जय भारत हे !
कोटिकोटिजनकण्ठसुभृतरव-
नित्यगीत-गौरव ! पुण्यस्तव !
जन्म-भूमि-वत्सल-रिपु-भैरव-
भटगण-पालित हे !
जय जय भारत हे ! 

१५

(ग)

## भारतभूमि-प्रशस्तिः

जय जय जय जय भारतमातः !
सुरपुरवरसुषमामयि ! सुखमयि ! जनयसि भूरिकृपातः ।। (ध्रुवपदम्)
हिमगिरिशिखररजतमयमुकटे सागरधौतसुपादे ।
प्रकृतिनटीसुविहारवनस्थलि ! परिहृतहृदयविषादे ।। १ ।।

पवनविलोललहरिकातरलितखेलितसुरसरिदङ्के ।
सगरतनयपरिपावनजलकणकृतजनशमनविशङ्के ! ।। २ ।।

निजनिजसमयसमागतषड्ऋतुजनितकुसुमरुचिशारे !
उर्वरसुतलसमुद्भवबहुविधवेल्लितशस्यसुभारे !
यमपरिभाविसुभटसुतसवनैर्जनितवैरिपरिभूते !
हृदयतिमिरहरणश्रुतिदर्शनकलाशिल्पशतसूते ।।

खनिशतनिभृतनिहितमणिकाञ्चनप्रभृतिधातुवसुवित्ते ।
हरिपदकमलसुपूतरजःकणमोहितजनजनचित्ते ।।

जननि ! तिमिरचयमयि हर निचितं हृत्पटले स्वसुतानाम् ।
कुरु सुमनिकरमिव स्रजि चेतो ग्रथितं प्रीतिभृतानाम् ।
हृतनिजहित-सीमित-मति-कलुषं स्वपरभेद-परिहीणम् ।
लघु विधेहि जन-जन-हृदयं तव चरणकमलरलिलीनम् ।।



१६

(घ)

## उपश्रुतिः

[ समूह-गानम् ]

[ लय—हम वतन के बागवाँ ]

देश एष उपवनं वयं च पालकाः ।
सर्व-गर्व-भञ्जना इमे न बालकाः ।।
वेपते नभस्तलं, कम्पते महीतलम्,
घूर्णते च दीपितं दिवि ग्रहर्क्षमण्डलम् ।
क्रोधना भवन्ति चेदमी चलालकाः ।।
देश एष उपवनं वयं च पालकाः ।। १ ।।

पुण्य-भूरियं प्रसूरशेषमङ्गल-प्रसूः,
यत्पयः-प्रपोषिता तनुः श्रियो बलस्य धूः ।
प्राणतः प्रिया न कस्य सा नु पालिका ?
देश एष उपवनं वयं च पालकाः ।। २ ।।

लुण्ठकाः परेत रे वञ्चका अपेत रे !
यात यात गृध्नवः क्षितेरितः प्रयात रे !
लोकवाहिनी समेति कालकालिका ।
देश एष उपवनं वयं च पालकाः ।। ३ ।।

बन्धुभाव-बन्धुराः समानभाव-सिन्धुलाः,
सतात्मभञ्जसाऽपि कालयोधने धुरन्धराः—
वयं, पलाय्य यात रे ! खला नतालिकाः ।
देश एष उपवनं वय च पालकाः ।
सर्वगर्वभञ्जना इमे न बालकाः ।। ४ ।।



१७

(ङ) 

# आह्वानम्

[ समूह-गानम् ]

अमृतपुत्र हे जागृहि बन्धो ! सङ्कटेऽस्ति तव मातृ-मही ।
मुञ्च मोहमयि ! भासय ककुभः खड्ग-धारया युद्धमही ॥

अमी वैरिणः क्रूरा बालिश ! गृहद्वारि कथमानीताः ? ।
पराधीनता-नरकाद् भ्रातर् वरं मृत्युरिति जानीथाः ॥

वेणुरागमयि विस्मर बन्धो ! दंध्वनीति यद् रणभेरी ।
"छिन्धि भिन्धि जहि घातय ताडय" गायतीति रे तव वैरी ॥

इष्ट-देवता रुष्टा नूनं प्रसादयेतामुपचारैः ।
महाकालमयि ! मण्डय भूयो मुण्डमालिका-नव-हारैः ॥

जन्मभूमिबलिवेदी सज्जा प्रतीक्षते तव बलिदानम् ।
शिरः समर्पय यदि जानीषे स्वतन्त्रताया महिमानम् ॥

गृहाणाऽसिमयि ! खण्डय खण्डय शत्रुमण्डलं रणचण्डः ।
यशोराशिभिर्मण्डय मण्डय दिशो वैरिणां यमदण्डः ॥



१८

(च) **आत्मार्पणोत्साहः**

[ काव्यावली ]

तव भारत ! पुण्या बलिवेदी मम भावमुदारं चेतयते ।
ननु गौरवमवितुं ते मातः ! प्राणानपि होतुं मन्त्रयते ॥

त्वदीये स्नेह-मृदुलेऽङ्के सुखं बाल्यं ममातीतम्,
सुधा-स्वादूदकं ते वत्सले ! स्तन्यं मयाऽऽपीतम् ;
इयं मृत्स्नाऽङ्गरागः पोषदः क्षीदो बलस्यन्दः
अयं प्राणायते सुरभिः समीरः शीतलो मन्दः ॥
निष्क्रेतुमिदं ते जननीदं कायेन मनो मे नोदयते ।

तव भारत ! पुण्या बलिवेदी ... ... ... ...
विभक्तं मानसं नः खण्डिता ते पावनी मूर्तिः
विभेदोऽस्मासु नैवं ते क्षतानां जायते पूर्तिः ।
सनिद्रा हा ! वयं क्षुद्रा मृगास्त्वां धर्षयन्तीमे
"सुता मे जीविता अपि धर्षणं किं मर्षयन्तीमे ।"
भव नेति निराशा जननि ! त्वं तव दीनदशा नः खेदयते ।
तव भारत ! पुण्या बलिवेदी ... ... ...

तवाऽपत्यानि कामं स्मो न मानस्तत्कृते चित्ते,
रसैस्ते पोष्यते देहो रति वैंदेशिके वित्ते।
तव क्रोडे स्थिताः स्पृहयालवः प्रत्यर्थिसंवासे
कथा त्वत्संस्कृतेः प्रेमा परं पाश्चात्यसंभाषे ॥
विपरीतदशां दर्शं दर्शं लोकोऽपि न किं नः कुस्मयते ॥
तव भारत ! पुण्या बलिवेदी ··· ··· ···

त्वदर्थे प्रीणनं नः स्यात् त्वदर्थे क्रीडनं नः स्यात्,
तपो भोगो रतिर्भक्तिस्त्वदर्थे च श्रमो नः स्यात् ;
मतिर्ज्ञानाभिमानौ नित्यमुत्कर्षोऽपकर्षो वा
अमर्षो वा प्रहर्षो वाऽथ तर्षस्त्वत्कृते नः स्यात् ॥
व्रतमेतदये ! त्वामुन्नेतुं हृदये करणीयतयोदयते ।
तव भारत ! पुण्या बलिवेदी ··· ··· ···



१९

(छ) ## व्याज-स्तुतिः

भारत ! तव गुरुता वचनीया ।
भवसि विकलहृदयं यदि घटना भुवि घटतेऽघटनीया ।।
वदसि बन्धुमयि ! जगति सकलमपि, काम्‌ं कोऽपि विरोधी ।
उद्‌गिरतीह गिरा गरलं गुरु हेतिकरः प्रतियोधी,
तमपि पाययसि सुधा-चषकमिति नीतिरहो महनीया ।।
भारत ! तव गुरुता वचनीया ।

धरति धृतिं धरणी नहि चकिता ज्वलदायुध-चय-भीता ।
मतिरथ शक्तिमदाऽऽकुलितानां समर-रसेन निपीता ।
हे शम-रसिक ! तदपि तव नीतिर्भवति नैव दयनीया ।।
भारत ! तव गुरुता वचनीया ।

प्रेमाऽऽयुधधर ! हृदय-विजय-पर ! राष्ट्रदेव ! प्रणमामि,
हे भारत ! सन्देशमिमं तव तुभ्यमेव विसृजामि ।
वहतु जगति ते शिवप्रसादात् शान्ति-सुधा स्वदनीया ।।
भारत ! तव गुरुता वचनीया ।



२०

(ज) ## प्रार्थना

जय महाकाल जय महाकाल !
शङ्कर ! प्रलयङ्कर ! चन्द्रभाल ! ॥ (ध्रुवपदम्)
रिपुषूदन ! दुर्धरमदन-गर्व-
खर्वण ! जन-चर्वण-खल-कराल !
अरिमण्डलमयि ! कुरु खण्डखण्ड-
महिमण्डन ! मण्डित-मुण्डमाल !
जय महाकाल ! जय महाकाल ! ॥ १ ॥

मृत्युञ्जय ! जय जय देव देव !
ताण्डवमण्डन ! जय महादेव !
रिपु-भैरव ! भैरव-तनय ! केव
भारत-भुवि विस्मृतिरखिलपाल !
जय महाकाल ! जय महाकाल ! ॥ २ ॥

भारतमव दुर्मद-वैरि-दून-
गौरवमयि ! पालय कालकाल !
उन्मीलय निटिलेक्षणमुदीर्ण-
विकटानलमुत्कटकोपशाल !
जय महाकाल ! जय महाकाल ! ॥ ३ ॥



२१

(भ) 

## प्रशस्तिः

जय जय भारत भुवन-मणे !
सुर-सदनेऽपि भवति न स महिमा यस्तव रजसः कणे कणे ।। १ ।
कुत्र नु लक्ष्याऽनुपमा सुषमा या दृष्टा ते तृणे तृणे ।। (ध्रुवपदम्)

जय जय भारत भुवन मणे ।।
जलधि-चपल-लहरी-वरमाला-लालित-सुललित-चरणतले ।
पटुमृदङ्गलीलाधरजलधरगर्जितनर्तितशिखावले ।
सुलभा क्व तदीया सा गुरुता मुकुटीकृतराजतहिमाचले ।।
जय जय भारत भुवन-मणे ! ।। २ ।।

वीरवराणां जन्ममही त्वं वरललनानां लुलद्वसुः ।
स्वर्णमणीनां खनिरतुलानां शस्यफलानामथ प्रसूः ।
दीनोत दरिद्रावस्था ते वितनोति विषादं मनस्तले ।। ३ ।।

जय जय भारत भुवनमणे !



२२

(ञ) ## गणतन्त्रोत्सवाभिनन्दनम्

[ संभूय गेयम् ]

गायत भारत-वीर जना रे !
गणतन्त्रोत्सव एति पवित्रः कुरुत गृहे तोरण-रचना रे ! ।। (ध्रुवपदम्)
स्मरत, पुरा नेहरुरुद्‌घोषम् अनुरावीतटमेवमतानीत् ।
पूर्ण-स्वराज्यमृते न हि भविता देशो मम खलु धीरमना रे ।।
गायत भारत-वीर जना रे ! ।। १ ।।

स्वगणतन्त्रमुदयादिह दिवसे वियति ननर्त सुखं च त्रिरङ्गः ।
हृदि हृदि मान उदैदथ लोके भारत भूरधुना सुमना रे ।।
गायत भारत-वीर जना रे ! ।। २ ।।

भारत देश उदारविधानैर्भूमितले प्रथितो दिवसेऽस्मिन् ।
वित्त ततः शुभपर्व प्रमोदैरभिनन्दत मिलितस्वजना रे ! ।।
गायत भारत-वीर जना रे ! ।। ३ ।।

कुरुत व्रतं शुचयो धियि सर्वे देशमिमं कर्तुं तु सुराज्यम् ।
गुरु यतनं करवाम समेता भवतु मही सुफला सुधना रे !
गायत भारत-वीर जना रे ! ।। ४ ।।



२३

(ट)

## स्वतन्त्रताभियानम्

एहि शूरवीर हे ! सङ्कटेषु धीर हे !
एधि मातृभूमये स्व-सर्वदान-धीरहे ! ॥ (ध्रुवपदम्)

साहसं तु जीवनं प्राणनं न जीवनम्,
लोलवीचिवदंध्वनद्-वारि रे नवीवनम् ;
धेहि पादमग्र एव दीनता-समीर हे ! ॥ १ ॥
एहि शूरवीर हे ··· ··· ···

मृत्युतोऽपि किं भयं ? यस्य चाऽऽनतिः स्वयम्,
तं निमन्त्र्य साहसेन याहि दुर्लभं जयम्,
गीतयाऽपि किं न तया शिक्षितोऽसि कीर हे !
एहि शूरवीर हे ! ॥ २ ॥

दास्य-जीवनेन किम् ? तस्य वैभवेन किम् ?
कोकिलस्य वागुरा-वृतेन नन्दनेन किम् ?
तत् स्वतन्त्रता-कृते प्रसर्प मुक्त-भीरहे !
एहि शूरवीर हे ! ॥ ३ ॥

यौवने चकाधि रे क्लीबतां च शाधि रे !
मुञ्च भीतिमङ्ग दर्प-कण्टकं प्रशाधि रे !
कुण्ठय स्व-साहसेन वैरिवाहिनीरये !
एहि शूरवीर हे ! सङ्कटेषु धीर हे !
एधि मातृभूमये स्व-सर्वदानधीरहे !



२४

(ठ) ## प्रयाण-गीतम्

चलन्तु दीप्त-साहसा युवान ऊढ-साहसाः ।
धृतौजसः स्वदेश-रक्षणैक-तान-मानसाः ।। (ध्रुवपदम्)

दृढं मनो विधीयतां सुधौजसो निपीयताम् ।
सुधीर-गर्जितैः प्रयाण-गीतमद्य गीयताम् ।
गीतमद्य गीयताम् ।
स्व-मातृ-भूमि-सङ्कटे स्फुटेऽपि के भटोद्भटाः ।
सुखं नु शेरते सुताः प्रगाढमानमानसाः ।। १ ।।
चलन्तु दीप्त-साहसाः ... ... ...

ध्रुवेऽपि जीवितक्षये स्थिरेऽथवा जगल्लये ।
वसून्यसून् पदं धनं प्रियं विचारयन्ति ये ।
बलं न धारयन्ति ते
मतिं न चारयन्ति ते,
दिनानि काक-घूक-शूकरादिवन्नयन्ति ते ।
व्रजन्तु ते लयं भयेन पीयमान-मानसाः ।। २ ।।
चलन्तु दीप्तसाहसाः ... ... ...

स्थिरं पदं निधीयताम्, ध्रुवं यशो निचीयताम् ।

ज्वलच्छिखाजटोऽनलोऽपि चन्दनं विधीयताम् ।
प्रयाति शान्ति-वाहिनी, अनीति-कूट-दाहिनी,
अशेष-दोष-कोश-रोष-लुण्ठन-प्रभाविणी ;
जले स्थले, भुवस्तले
गिरौ, ख-मण्डलेऽखिले
यशोऽर्जन्त्वरुद्धविक्रमा अजात-साध्वसाः ।। ३ ।।

चलन्तु दीप्त-साहसा युवान ऊढ-साहसाः,
धृतौजसः स्वदेश-रक्षणैकतानमानसाः ।।



२५

## (ङ) अभिलाषः

(लय—नगरी नगरी द्वारे द्वारे ढूँढूँ मैं साँवरिया)

धरणी जननीयं मे पुण्या जीवनमस्यै यच्छेयम् ।
स्वर्गस्तस्या लघुतर-महिमा तं किं जीवन्निच्छेयम् ? ॥
(ध्रुवपदम्)

दायं दायं क्षीरं नीरं या मम सुबलदा,
यस्याः क्रोडे क्रीडं क्रीडं मम तनुरगदा ;
तस्या मानं शक्त्या भक्त्या सर्वस्वेन च रक्षेयम् ।
धरणी जननीयं मे पुण्या जीवनमस्यै यच्छेयम् ॥ १ ॥

लुब्धे क्षुब्धे क्रुद्धे मुग्धे या मयि सकरुणा ।
धिग् धिङ् मां यदि साऽपि विषीदति सततमशरणा ।
तस्या दैन्यं हर्तुं क्षिप्रं किं नो अग्रे गच्छेयम् ?
धरणी जननीयं मे पुण्या जीवनमस्यै यच्छेयम् ॥ २ ॥



२६

(ढ) 

## परिदेवनम्

[ भुजङ्गप्रयाते—वफा कर रहा हूँ, वफा चाहता हूँ । ]

गता साधु-वेला सुमेलापकानाम्,
प्रयाता घटी दुर्घटा संगतानाम् ।। (ध्रुवपदम्)
श्रिता दुर्मतिः सन्मतिं नो भजन्ते,
न कोशं किलैकं कृपाणाः श्रयन्ते;
कृतैर्भेदभावैरभावैर्हताना-
मियं दुर्दशा भारते भारतानाम् ।। १ ।।
गता साधु वेला ... ... ...

कृता भेद-भित्तिर्मनुष्ये मनुष्ये,
घृणा भावना बान्धवे हा सदृक्षे;
बलं जृम्भते शोधने सोदराणाम्
कथं मङ्गलं भो वचःपौरुषाणाम् ? ।। २ ।।
गता साधु वेला ... ... ...

स्व-धर्मे मतिर्नो मतिः स्याद्धधर्मे,
न विद्वेषभावो विधेयो विधर्मे;
उदारा विलीनाऽद्य धीः सा नराणाम्
श्रिता वृत्तिरेतैरतो दानवानाम् ।। ३ ।।
गता साधु वेला ... ... ...

इमामङ्गनामङ्ग ! नाना-स्वरूपा-
मये दूषयेर्नोविलासैकबुद्ध्या ।
जनन्यां भगिन्यां सुतायां स्नुषायां
कथं भाविकं जायतां दुर्मतीनाम् ।। ४ ।।
गता साधु वेला ... ... ...



२७

## (ण) पारवश्य-खेदः

[ लय—मेरा मन डोले मेरा तन डोले······ ]

सरदुरुगन्धे घन-मकरन्दे स्यन्दित-रतिरस-सा३रे१
शोभया स्यन्दित-रति-रस-सारे३
हन्त ! वसन्ते शिशिर-दुरन्ते
कथमिव रौति न सा३रे१ हा पिकी
कथमिव रौति न सा३ रे। (ध्रुवपदम्)

चपलचपलमनया तरु-शिखरे
सरुचि समोदमनर्ति
कानने सरुचि समोदमनर्तिः
निजच्छन्दमनु गान-निरतया
सततं स्वैरमवर्ति
मत्तया सततं स्वैरमवर्ति,
मिलदलिमाले सुरभिरसाले
जालैर्नियतगता
न गायति साऽपि विषण्ण-मना रे ! ॥ १ ॥
सरदुरुगन्धे ··· ··· ··· ···

मधुर मधुरमशनं बलकरणं
येनाऽविरतमदायि
रोचकं येनाऽविरतमदायि,

अमृतसरसममलं गुणि सलिलं
यस्य च नित्यमपायि
जीवनं यस्य च नित्यमपायि ।
जननसुजाते परवशयाते
देशे ननु विमना २
भवति भुवि को नहि धीरमना३ रे ! ॥ २ ॥

सरदुरुगन्धे ... ... ... ...

अनल-शिखा-जटिले निजभवने
को वद रे ! मुदमेति
चेतनः को वद रे ! मुदमेति ?
भुवन-तले परवानपि सुमतिः
को न सखे शुचमेति ?
मनस्वी को न सखे ! शुचमेति ?
इति निज-देशे रिपु-परिवेषे
केशे भवति न या३ति-
रोषं को ननु सबलमना३रे ! ॥ ३ ॥

सरदुरुगन्धे ... ... ... ...



२८

(त)

## शुभाशा

[ लय—हुश्न कहता जा रहा है बादशाही कुछ नहीं ]

वर्धते भोः संस्कृतिर्नः पुष्यतीदं भारतम्,
स्वागतं स्वाधीनताया एकतायाः स्वागतम् ॥ (ध्रुवपदम्)

हन्त ! मलिना सा विलीना दुर्निराशा यामिनी,
द्योतते कादम्बिनीनामञ्चले सौदामिनी,
अद्य दिनकर उज्जिहीते भासयन् स्वं विक्रमम्
स्वागतं स्वाधीनताया एकतायाः स्वागतम् ॥ १ ॥

धर्म-दर्शन-साहितीनामद्य फलिनी साधना,
ऐकमत्यं मानवानां प्रेम-सरसा भावना;
जायतामानन्दयोगादत्र वृद्धिरनारतम्,
स्वागतं स्वाधीनताया एकतायाः स्वागतम् ॥ २ ॥

मानवत्वं चेत्समानं का घृणा भेदो नु कः ?
येन दानवता जयति किं नैष धर्मो निष्फलः ?
इत्युदारदृशा जनानां कश्मलं विलयं गतम्
स्वागतं स्वाधीनताया एकतायाः स्वागतम् ॥ ३ ॥

नीरुजा सबला तनुः स्याद् बन्धुता-मधुरं मनः
ऋद्धि-तुष्टि-सुपुष्टि-करुणा-भावितो मुदितो जनः,
जायतां सुफला कृषिः, श्री-शारदे कुरुतां रतिम्,
स्वागतं स्वाधीनताया एकतायाः स्वागतम् ॥
वर्धते भोः संस्कृतिर्नः पुष्यतीदं भारतम् ॥



# संस्कृत-महिमा

२६

(क) ## प्रेरणा

[ लय—भुजङ्गप्रयाते—तेरे प्यार का आसरा चाहता हूँ । ]

तनुध्वं रतिं संस्कृते भारतीयाः ! ।
विना संस्कृतं कीदृशा भारतीयाः ? (ध्रुवपदम्)
तनुध्वं रतिं … … … …

इयं पावनी देववाणी पुराणी
चिरं पूर्वजैर्नः सरागैरभाणि ।
उदासीनता तत्र वः कीदृशीयं
यया संस्कृतिः संस्कृतिर्भारतीया ॥ १ ॥
तनुध्वं रतिं … … … …

यया वेद-सन्देश-सन्देश-कर्म
प्रथामागतं धारितो वाऽपि धर्मः ।
पवित्रं चरित्रं करोति व्रतैर्या
न तां गर्हयन्तो हता भारतीयाः ? ॥ २ ॥

पुरा व्यास-वल्मीक-भू-कालिदासैः
सभासैः श्रिता शारदाया विलासैः ।
शिवं शेवधिं पूर्वजानां निजानां
त्यजन्तो गिरं किं ध्रुवं भारतीयाः ? ॥ ३ ॥

विदेशेषु या गीयते शील्यते वा
कण्ठेहत्य यस्या रसः पीयते वा ।
रसालामिमां जीवनीं स्वादुबल्यां
न किं वर्जयन्तो मृता भारतीयाः ? ॥ ४ ॥
तनुध्वं रतिं ... ... ... ...

अतीते प्रतीते स्थिता राजमान्या
सुगण्या सुधन्याऽथ तुल्या जनन्या ।
मलीनाऽतिदीना विगीता सुतैः स्वैः
न किं वो ह्रिये निर्घृणा भारतीयाः ॥ ५ ॥

तनुध्वं रतिं संस्कृते भारतीयाः
विना संस्कृतं कीदृशा भारतीयाः ॥ ५ ॥



३०

(ख) **आक्रोशः**

[ कज्जली ]

[ लय—हे दयामय दीनवन्धो ! मे च मेधा दीयताम् ]

भारतीय जना ! भवन्तः किं विरक्ताः संस्कृते ?
देववाणीयं पुराणी दर्पणो नः संस्कृते ।। (ध्रुवपदम्)

विश्ववाङ्मयमौलिभूता ज्ञान-रूपाः पावनाः ।
ब्रह्मणः श्वसितं च वेदाः किं न तेऽस्मिन् संस्कृते ?
भारतीय जना भवन्तः ··· ··· ··· ···
मर्त्य-धर्माणः कथं देवा अमर्त्यत्वं गताः ।
आदिदेवा दैत्यतामिति चैव लिखितं संस्कृते ।।
भारतीय जनाः ··· ··· ···

तानवेऽपि समान-भावे मानवेऽथो दानवे ।
किं निमित्तो भेद इति भो वर्णितं तत्संस्कृते ।।
भारतीय जनाः ··· ··· ···

जीवितोऽपि कथं विमुक्तो जायते जीवो भुवि ।
आचरन् कर्माऽपि नित्यं किं न चैतत् संस्कृते ? ।।
भारतीय जनाः ··· ··· ···

आत्मनो नित्यत्व-सन्देशैर्यया मृत्योर्भयम् ।
त्याजितं, सा चाऽपि गीता किं न गीता संस्कृते ? ।।
भारतीय जना भवन्तः ··· ··· ···

वानराणामात्मजं स्वं किं पठित्वा हर्षिताः ? ।
कीर्तयत्यमृतस्य पुत्रान् किं तु गर्हा संस्कृते ! ॥
भारतीय जना भवन्तः ... ... ...

यत्र विहगस्याऽपि रुदिते शोक उदितः श्लोकताम् ।
यात आदिकवेः सुकाव्यं केवले तत्संस्कृते ॥
भारतीय जनाः ... ... ...

प्रीति-शक्त्या येन भू-स्वर्गौ समं संमेलितौ ।
कालिदास-कवेः सुकाव्यं तस्य किं नो संस्कृते ? ॥
भारतीय जनाः ... ... ...

आदिरितिहासो मनुजताया नु किं जिज्ञासितः ? ।
भारतेऽथ पुराणकल्पे, वर्तते तत् संस्कृते ॥
भारतीय जनाः ... ... ...

म्लेच्छितैः किं म्लेच्छतामालिङ्ग्य गर्वः संश्रितः ? ।
संस्कृतीभवितुं रुचिः क्रियतां समानं संस्कृते ॥
भारतीय जना भवन्तः किं विरक्ताः संस्कृते ?
देववाणीयं पुराणी दर्पणो नः संस्कृतेः ॥



३१

(ग)

## उल्लासनम्

[ अनेकैर्मिलित्वा गेयमिदं गीतम् ]

देव-गिरं नर पठ पठ रे !
संस्कृतवाचं वद वद रे ! (ध्रुवपदम्)
सार्थमधातु प्रातिपदिकमिह
प्रत्यय-हीनं वाऽपि कृदन्तम् ।
तद्धितगं च समासान्तं भोः
पदं बहु विधं रट रट रे !
देव-गिरं नर पठ पठ रे !
संस्कृत-वाचं वद वद रे ! ॥ १ ॥

अव्ययभावं तत्पुरुषं
कर्मधारय-द्विगुभेदम्;
बहुव्रीहिमपि द्वन्द्वविधे
चैकशेषमिह शिक्ष सखे ! ॥ २ ॥
देवगिरं नर ! पठ पठ रे !
संस्कृत वाच्चं वद वद रे !
देवगिरं नर ··· ··· ···

स्वौजस्-कथिता यत्र विभक्तिः
सुप-तिङ् रूपा वा पदशक्तिः,
प्रकृति-प्रत्ययमिलिता व्यक्तिः

गिरि तस्यामयि ! गद गद रे !
संस्कृत-वाचं वद वद रे ! ॥ ३ ॥

प्रागुपसर्गानन्ते प्रत्यय-
मुपयुङ्क्ष्वाऽथ समासे सन्धिम्
कुरु प्रगृह्यं चाऽपि निपाते
वाक्ये स्वेच्छं पठ पठ रे !
देव गिरं नर पठ पठ रे ! ॥४॥

रामायणमिह पुण्यकथां
महाभारतं चैतिह्यम्
पुराणानि बहुनीतिकथा
अत्राजस्रं रस रस रे !
देवगिरं नर पठ पठ रे ! ॥ ५ ॥

अष्टाध्याय्यां ग्लायसि किं ?
यास्क-निरुक्ते म्लायसि किं ?
न यन् म्लेच्छिते त्वं क्लाम्यसि
निन्दस्येतामथ शठ रे !
देव-गिरं नर पठ पठ रे ! ॥ ६ ॥

नव-नव-जाति-परिष्कृत-शय्या-
बहुविधपाकपदावलिमय्या ।
उज्ज्वल-रस-सुरसाल-रचनया
मुखं सुरगिरा संस्कुरु रे !
देवगिरं नर ! पठ पठ रे !
संस्कृत वाचं गद गद रे !



३२

## (घ) परिदेवनम्

देव-गवी किमु दीना ?
भारत-भाषा: सम्मर्द्येयं वैदेशिक-गी: पीना ।। (ध्रुवपदम्)

यस्यां श्रुतय: स्मृतयोऽनन्ता वेदाङ्गान्यखिलानि ।
महाभारतं रामायणमथ वर्तन्तेऽविकलानि ।
ग्रन्थ-संहतिर्विपुला यस्या विस्मृति-गर्भे लीना ।।
देव-गवी किमु दीना ।। १ ।।

यत्र पुराणानामतिभूमि: कौटिल्योक्तिरुदग्रा ।
नव-दर्शन-वन-वीथी गहना वरविज्ञान-समग्रा ।
कालिदास-कवि-भणितिर्यस्यां सा कथमिव रे हीना ? ।
देव-गवी किमु दीना ? ।। २ ।।

संस्कृति-महिमा यत्र निरुक्त: शाश्वत आर्य-सुजाते:
भारत-महिमा चाऽपि समुदितो यस्यां सर्ग-विभाते,
तां त्यजतां निज-गौरव-मूलं किं न मतिर्व: क्षीणा ?
देव-गवी किमु दीना ? ।। ३ ।।

मानव-धर्मं शिक्षयतीयं धरणीं चापि सुजननीम् ।
प्राणि-कदम्बे सकले स्वत्वं करुणां श्रेय:-सवनीम् ।
तत्र विरक्तानां नु मतिर्व: किं न कपित्वाधीना ?
देव-गवी किमु दीना ? ।। ४ ।।



# प्रकृति-सुषमा

३३

(क) **त्रियामां प्रति**

[ कज्जली ]

[ लय—यहाँ वदला वफ़ा का बेवफाई के सिवा क्या है ? ]

त्रियामे याति यामोऽवेक्षसे कस्याऽऽगतं बाले !
प्रियः कस्ते शुभे ! त्वं वीक्षसे यस्यागतं बाले ! ॥ १ ॥

शशी द्वारे चिरादास्ते प्रसादार्थं तव श्रीमान् ।
अतः प्रेयानसौ को वीक्षसे यस्याऽऽगतं बाले ! ॥ २ ॥

इदं नीलाम्बरं चित्रं तथा रत्नावली तारा ।
सुसज्जा किं तदर्थे वीक्षसे यस्याऽऽगतं बाले ! ॥ ३ ॥

किमर्थं कोपने मुक्तस्तमिस्रः केशपाशोऽयम् ।
शठो यातोऽन्यतः किं वीक्षसे यस्यागतं बाले ! ॥ ४ ॥

सखी ते कौमुदी मूका दधाना दीपितामुल्काम् ।
विचेतुं किं गता तं वीक्षसे यस्याऽऽगतं बाले ! ॥ ५ ॥

सुखं निद्रा-रसे मग्नस्तवोत्सङ्गे शिशुर्लोकः ।
विनिद्रा त्वं वराकी वीक्षसे कस्यागतं बाले ! ॥ ६ ॥

किमर्थं शोभने ! श्यामं मुखं ते मानसं दूनम् ?
अलज्जः को गतस्त्वं वीक्षसे कस्याऽऽगतं बाले ! ॥ ७ ॥
त्रियामे याति यामः ... ... ...



३४

(ख) तडिद्-घन-रतिः

[ लय—तू मेरा राग मैं तेरी रागिनी। द्वाभ्यां पर्यायेण गेयम् ]

तरुणिम-मदिरा तडित्कामिनी,
विलसति गगने चपलगामिनी।

भोः स्थितवति पुरतः प्रिये का प्रिया ? प्रिये का प्रिया,
भवति न सहसा तरलितान्तरा तरलितान्तरा ?

ननु विभ्रम-मधुरा चारुहासिनी,
तरुणिम-मदिरा तडित्कामिनी ॥

ओ३……जलधर उदितो निकष-मेचको निकषमेचकः
घनरस-तरलो रणित-रोचको रणित-रोचकः,
परिरब्धुमुदञ्चति वर-विलासिनी
तरुणिम-मदिरा तडित्कामिनी ॥

सा३ सा कनकोज्ज्वल-वर्णा विकटहासिनी
विकटहासिनी,
अभिवल्लभमञ्चति नृत्यलासिनी
नृत्यलासिनी
अपयाति परस्ताल्लघु-विलासिनी
लघुविलासिनी
तरुणिम-मदिरा तडित्कामिनी
विलसति गगने चपलगामिनी ॥

रे३ विहसति दयितः प्रिया-पृष्ठगः
प्रिया-पृष्ठगः,

धरति सरभसं स्तनित-भैरवः
स्तनित-भैरवः।
उरसि विनिहिता शुभ्रा दामिनी
तरुणिम-मदिरा तडित्कामिनी।
विलसति गगने चपल-गामिनी ॥

हा३ रति-रस-तरलं युगलमम्बरे
युगलमम्बरे,
जगदपि सरसम् ऋतौ बन्धुरे
ऋतौ बन्धुरे,
पुलक-परिगता भूतधारिणी।
तरुणिम-मदिरा तडित्कामिनी ॥

हो३ अहो विटपिनी रसात् कम्पते
रसात् कम्पते
प्रमुदित-कुसुमा तरौ लम्बते
तरौ लम्बते ॥

प्रमदति तटिनी कल-निनादिनी
कल-निनादिनी ॥

तरुणिम-मदिरा तडित्कामिनी।
विलसति गगनें चपलगामिनी ॥



३५

(ग) 

## जिज्ञासा

कनकदीपवरकरे ! विलासिनि ! चपलतारके ! बाले !
उषः ! किमसि चलिता ननु दधती कुङ्कुम-तिलकं भाले !
विरलभूषणा ज्योतिर्मयतनुरुदयमानवरशोभा ।
प्राची-परिसर-गता तपस्यसि किमु नववयसि विलोभा ।।
नीलाम्बरमयि ! धुतं तारकितमुरु पल्लवं सुदूरे !
मुखे बाष्पकणनिकरो मज्जति भूश्चित्रीया-पूरे ।।
हृतस्तारकावकरसङ्करो वियत्पथः परिशोभी ।
कमलसङ्कटादहो मोचितो मधुव्रतो मधुलोभी ।।
हितश्चारयितुमेष गोचरे गणो गवामतिचारी ।
दिशो रञ्जयति वर्णैर्विविधैस्त्रिभुवनदर्शनहारी ।।
नील-शाद्वले चरति न तरलश्चुम्बति दिक्सीमानम् ।
बभ्रुवर्णकः को नु तर्णको लघु स्पृशति महिमानम् ।।
चाटकेरततिराश्रितरीतिः प्राभातिकमिह रागम् ।
त्वया शिक्षितं रौति कलं किल दिशि दिशि विहितविभागम् ।।
चटचटायितैः कलिका स्मयते नृत्यति पल्लव-दोला ।
न किं छोटिका-संज्ञां यच्छति लतिका पवन-विलोला ।।
पिष्टातकमिव रङ्ग-सलिलमिव वर्षसि पिङ्गलरागम् ।
होलिकोत्सवं खेलसि किं सखि ! रञ्जितदिगवनिभागम् ।।
अलं मोहनै र्मायामयि ! ननु वद का भवसि सुलोला ? ।
सदा व्रजसि लोचनगोचरमयि यासि च वञ्चनशीला ।।



३६

## (ध) वसन्त-गीतिः

[ ध्रुवपदं लोकगीतरीत्याऽनेकैः समवेतैर्गेयम् । श्लोकस्त्वेकेन ]

छविरतिहृदयहरेयं राजति वासन्ती ।
परभृततितरतिमधुरं गायति वासन्तीः ।।

वासन्ती लतिका विभाति परितश्छन्ना प्रफल्लैः सुमैः
चञ्चत्-सर्षप-सून-राजि-रुचिरा पीताम्बरा भाति भूः ।
शुष्यत्पर्णकमर्मरध्वनिभृतो नृत्यन्ति शाखाभुजा
श्लिष्यन्तो मलयानिलेन सविधे नीता नवा वल्लरीः ।।

दर्शं दर्शमुदारं मुग्धा माद्यन्ती
रतिरपि रणरणकेनोत्कूजति वासन्तीः ।
छविरतिहृदयहरेयं राजति वासन्ती
परभृततितरतिमधुरं गायति वासन्तीः ।।

माकन्दे कलिकाः कलो विचकिलाः पुष्पन्धयाश्चञ्चला
आकण्ठं परिपीय कुन्द-कुसुमे स्फारं मरन्दं मुदा ।
निर्विण्णा नव-सौरभेण विवशाश्चञ्चूर्यमाणा मधा-
वुद्गायन्ति कलं रसाल-मुकुले पानोत्सवायोत्सुकाः ।।

ऋतुपतिमर्चति सदने मधुरं गुञ्जन्ती
दयित-समाहित-हृदया बाला वासन्तीः ।
छविरतिहृदयहरेयं राजति वासन्ती
परभृततितरतिमधुरं गायति वासन्तीः ।।

एता उन्मदपत्रिकाः सुचपला मूर्तां छविं माधवीं
पत्रैः पुष्प-परागवर्णकधरैः सन्दर्शयन्त्योऽभितः ।

तन्वा चम्पक-रोचिषा सुवसनै र्वासन्तरङ्गोज्ज्वलै-
रात्मस्थं नु विधित्सतीर्ऋतुपतिं कुर्वन्ति तुल्याः स्त्रियः ।।

कविमतिरुत्कलिकेयं भुवनं परियन्ती
स्वयमपि विनिहितरागा जाता वासन्ती ।
छविरतिहृदयहरेयं राजति वासन्ती
परभृततितिरतिमधुरं गायति वासन्तीः ।।

३७

(ङ)

## पाटलां प्रति

[ लय—ऐ वसन्ती पवन पावन ना जा रे ना जा रोके कोई ]

कण्टकानां कुसुम-शयनं किमधिशेषे पाटले !
व्रतमिदं विषमं वितनुषे नव-वयसि किं पाटले ! ।। १ ।।
को नु दुःशासन-करः किसलय-वसनमयि ! तेऽहरत् ?
कुत्र ते ते सुरस-रसिकाः शकुनि-विजिताः पाटले !
मृदुतनो ! सहते न तनुमपि तव करस्पर्शं तनुः ।
शूल-शयनं तप उदारं चरसि किमिदं पाटले !
किं नु ते दयितः प्रयातो दूरमयि न निवर्तते ?
विकचिलामपि को नु निर्दयहृदय एवं त्यजति रे !
हन्त ! विधुरे ! लोक ईदृश एव मा शुच उत्सुके
राग-वृत्ती रसिक-मनसां मधुकरी ननु पाटले !
कण्टकानां कुसुम-शयनं किमधिशेषे पाटले !
व्रतमिदं विषमं वितनुषे नववयसि किं पाटले !



३८

(च)

# वसन्ताभिनन्दनम्

[ समूह-गानम् ]

ऋतुपतिरुपगत एष सखायः ।
शिशिरदुरितपरितापहरा इह
दिशि दिशि विततास्तस्य हि रायः ॥
मलय-पवन इभ इव मन्थरगति-
रुपहित-कुसुमनिचय-बहुमायः ।
बहुतिथसरणकृतश्रम इव किं
शिथिलो वाति जनितमदमायः ॥
ऋतुपतिरुपगत एष सखायः ।
रचयति तरुगणमधिगतभूतिं
गलित-पलितमुपचितनवसूतिम् ।
हरति लता-परिणतिमथ रसिको
नवसुमदानंविवर्धितकायः ॥
ऋतुपतिरुपगत एष सखायः ॥
विकचिल कलिकाचटचटकारैः
प्रथितसुतालध्वनिसविलासः ।
नृत्यति परितः कुसुमविचित्रस्
चलयुगपत्रीवरसमुदायः ॥
ऋतुपतिरुपगत एष सखायः ॥



३९

(छ) ## नदी-संगीतम्

अमृतधारा वहति रे !
शिशिरजलशीतेन मरुता तापमखिलं दहति रे !
चटुलतरखगमालिकानिक्वाणशिञ्जितकिङ्किणीका,
मदकलैः कलहंस-विरुतैर्जनितनूपुरसुध्वनिः सा,
ललितलहरीपाणिकलितां मालिकां दधती सुमनसाम्,
किं नु पारावारमभिकं कामिनीयं स्खलति रे ! ।
अमृतधारा वहति रे ! ॥
वारुणी-परिचुम्बनैरारज्यमानसुमण्डलः,
संस्मरन् सन्ध्यावियोगं सद्य उच्छ्रतमङ्गलः,
तापमन्तर्गतमये ! निर्वापयितुमत्याकुलः,
किं रविः पतितोऽत्र तद्-दाहेन सिन्धुर्ज्वलति रे !
अमृतधारा वहति रे ! ॥
तीरमनुरुहभूरुहालीगतकुलायकुलामलाङ्के,
शयितमतिशिशुशावकं विहगी चिकीर्षन्ती निजाङ्के ;
लोकते मुहुरभितरुं मुहुरथ फलानि विचिन्वतीयम्,
निजसखीरामन्त्रयति 'वः किं न सन्ध्या छलति रे ?' ॥
अमृतधारा वहति रे ! ॥
मन्दमारुततरललहरीक्ष्वेलितैरभिहन्ति तीरम्,
छप् छपा छप् ध्वनिमुदारं भूयसा ध्वनतीह नीरम् ;
भग्नरोधःपातसमकालं कलितमृदुकलकलैः
जलतरङ्गे वादिते मृदुमूर्छनेवोच्चरति रे !
अमृतधारा वहति रे ! ॥



४०

(ज)

# प्रकृति-विलसितम्

## ( समूह-गानम् )

[ ध्रुवपदं मिलित्वा गेयम् । अन्तरा तु पृथगेकैकशो गेया ]

पश्य पश्य कौतुकं प्रकृतिररतिविलासिनी । (ध्रुवपदम्)
मल्लिका लताङ्गना बहु-पतङ्गिकावृता,
सरस-किसलयाऽधरा ललितदन्तकुड्मला ;
खग-कुल-कल-किलकिला-स्वनेन चारुहासिनी ।।
पश्य पश्य कौतुकं प्रकृतिररतिविलासिनी ।। १ ।।
वीत-ताप-पेशलं दिवसमंशुकोमलम्,
कुङ्कुमाक्तकेशया सन्ध्यया सुसङ्गतम् ;
वीक्ष्य रविं लम्बितं दूयते सरोजिनी ।
पश्य पश्य कौतुकं प्रकृतिररतिविलासिनी ।। २ ।।
विगृह्य तामसैर्दलैर्दिवसमस्तपौरुषम्
वीक्ष्य भानुमेकलं मनसि बिभ्रती रुषम् ;
उद्यदृक्ष-मण्डला समेति चन्द्र-वाहिनी ।
पश्य पश्य कौतुकं प्रकृतिररतिविलासिनी ।। ३ ।।
तूल-गोल-मञ्जुले खण्ड-मेघ-मण्डले
किमिति दाह एष भो दृश्यते नभस्तले ?
हन्त ! भासते दिशा मदन-दाह-धारिणी
पश्य पश्य कौतुकं प्रकृतिररतिविलासिनी ।। ४ ।।
इयं सुवर्ण-यूथिकाऽऽमोदिनी च पाटला
सौरभैर्मनोहरा कुमुद्वती समुज्ज्वला ;
फुल्लकैरवावली दीर्घिका सुहारिणी ।
पश्य पश्य कौतुकं प्रकृतिररतिविलासिनी ।। ५ ।।



# प्रकीर्णकानि

४१

## (क) संधुक्षणम्

जीवन-दीपक ! ज्वल ज्वल हे !
वितर विभामयि ! भासय भुवनं
तिमिरं निखिलं दल दल हे ! ॥ (ध्रुवपदम्)
दह पतगानयि ! रूप-सुरसिकान्
न गुण-गणं ये गणयन्ति ।
खल-शलभानथ निर्दह निर्दह
चपलतया ये खिलयन्ति ।
चल न कृपणतानिल-निर्धूतं
निःक्षय-तेजःसंबल हे !
जीवन-दीपक ! ज्वल ज्वल हे ! ॥ १ ॥
स्पृश न कदाचित् कल्मषकज्जल-
मन्तर्दूषणमण्वपि रे !
विमलशिखामयि ! धारय नित्यं
चारय चेतो जगदजिरे !
मुञ्च मुञ्च भो धूमाकुलतां
सत्त्व-भूमता-निश्छल हे !
जीवन-दीपक ! ज्वल ज्वल हे ! ॥ २ ॥
सदा हासयसि ककुभो हासै-
र्गृहं भासयसि स्व-विलासैः,
दशा-च्छेदनैर्द्विगुणितरोचि-
र्जयंश्च तमसो निर्वासैः,
स्नेह-सुधामर ! निर्वाणं न
स्मर, ज्योतिर्मय ! ज्वल ज्वल हे !
जीवन-दीपक ज्वल ज्वल हे ! ॥ ३ ॥

४२

(ख) संबोधनम्

किं मानव ! जीवनमवमनुषे ?
न्यासस्त्वयि निहितो गुरुरेतद्
विधिना, किमरे त्वं तं कृणुषे ? ॥ (ध्रुवपदम्)

लूतावदिदं भो निजबन्धनजालं न त्वया किं विततं रे ?
पतितः स्वयमस्मिन् स्वैर्दोषैर्मूर्धानमिदानीं किं धुनुषे ?
किं मानव-जीवनमवमनुषे ? ॥ १ ॥

परपीडनहेतोर्ये पाशा दृप्तेन कृता बहुरीतीनाम्,
अधुना गलबन्धस्तव जाता निजकर्मफलं किं नो सुनुषे ?
किं मानव जीवनमवमनुषे ? ॥ २ ॥

किं भ्राम्यसि भूयो मरु-राशौ सन्तापमयोऽयं ननु पन्थाः ।
पिब प्रेम-सुधामयि शमहेतोः किं वह्निकणान् भो अवचिनुषे ?
किं मानव जीवनमवमनुषे ? ॥ ३ ॥

भूतेषु दयामयि ! धेहि सखे ! शरणं भव दीनानाथानाम् ।
उत्साहमयो भव धीरमनाः सफलाय यतेथा निजजनुषे ॥
किं मानव जीवनमवमनुषे ? ॥ ४ ॥



.४३

(ग)

## नैराश्यनिरासः

[ समूह-गानम् ]

[ लय—आँसू न बहा फरियाद न कर जो चलता है सो चलने दे ]

जीवन्न निराशो भव मानव ! मा चिन्तय 'जीवनमफलं ते',
तनु रागमुदारं चेतसि रे ! भविता ननु भुवनं सकलं ते ॥
(ध्रुवपदम्)

दैन्यं किमये ! त्वं संश्रयसे चैतन्य-निधानं सुखराशिः ।
महदेव विचित्रं तपने चेदुदिते तिमिरौघा विजयन्ते ॥ १ ॥
जीवन्न निराशो भव ... ... ...

ननु शक्तिरशेषा निहिता त्वयि सत्त्वं च समस्तं स्पृहणीयम् ।
चिर-चिन्मय ! चिन्मयमाश्रय रे ! आनन्द-सुरूपं विमलं ते ॥ २ ॥
जीवन्न निराशो भव ... ... ...

भूतेषु दयामय एधि सखे ! भव चापि सहायो दलितानाम् ।
दुःखं यदि हर्तुं पारयसे जगतो, ननु जननं सफलं ते !
जीवन्न निराशो भव ... ... ...

अलमात्मनि लाघवबुद्ध्या रे परमात्म-कला त्वं नित्यसुखा ।
भेदस्य धियं चेल्लोपयसे विश्वं खलु जातं विपुलं ते ॥
जीवन्न निराशो भव ... ... ...

खेलैव नियुद्धं सुरतं वा विस्रम्भ-कथा वा कलहो वा ।
क्रोधोऽथ भयं वा किम्मूलं ब्रह्माण्डमिदं चेन्निखिलं ते ॥
जीवन्न निराशो भव मानव ! मा चिन्तय 'जीवनमफलं ते' ।
तनु रागमुदारं चेतसि रे ! भविता ननु भुवनं सकलं ते ॥



४४

## (घ) उल्लासगीतम्

गाय सखे !
नृत्य सखे !
जीवनाय भूरि सखे !
मानुषं शरीरमिदं जीवनं त्वमूल्यमिदं
रोदनाय नैव सखे !
गाय सखे ! नृत्य सखे !
जीवनाय भूरि सखे !
सङ्कटानि कस्य नो ?
वैभवानि कस्य नो ?
रोग-शोक-हानि-लाभ-दुर्गतानि कस्य नो ?
अट्टहास-निर्धुतया चिन्तया किमत्र सखे !
गाय सखे ! नृत्य सखे
जीवनाय भूरि सखे !
साहसेन जीवनम्,
सङ्कटेन खेलनम्,
मृत्युरागतोऽपि पुरः सस्मितं वहेलनम्;
दुर्लभं शरीरमिदं भोजनाय नैव सखे !
गाय सखे ! नृत्य सखे !
जीवनाय भूरि सखे !
चन्द्रवर्तिवज्ज्वल,
रे गजेन्द्रवच्चल !
दुर्गमेऽथ पर्वतेऽपि जातु नो पथः स्खल !
यौवनं नवीनमिदं कूणनाय नैव सखे !
गाय सखे !
नृत्य सखे !
जीवनाय भूरि सखे ! 

४५

(ङ)

# चिन्तनम्

( कज्जली )

[ लय—वो जा रहे हैं इस तरह पहचानते नहीं ]

जीवो मनुष्ययोनिं लभते यदा कदा ।
घटिकाः सुखस्य तस्मिन् लभते यदा कदा ॥
अर्को रसं रसायाः कर्षत्यनारतम् ।
मुञ्चत्यसौ तु वृष्टे बिन्दून् यदा कदा ॥
मेलापकं जनानां जायेत नित्यशः ।
संमेलनं तु मनसां घटते यदा कदा ॥
कामेन मित्रतामिह सर्वस्तनोति भोः ।
कामं विना तु प्रीतिं भजते यदा कदा ॥
क्षेमाय स्वस्य येऽपि विकर्माणि तन्वते ।
लोकस्य शंकुतेऽपि नु किं ते यदा कदा ॥
लभ्येत पर्वतेषु यथेच्छं शिलाचयः ।
चिन्तामणेस्तु तत्र सुलाभो यदा कदा ॥
गृह्णन्ति जन्म कोटिशः कामं जना दिने ।
उत्पद्यते नरः खलु कश्चिद् यदा कदा ॥
कृच्छ्रे निजेऽत्र को नहि वाष्पं विमुञ्चति ।
दुःखे द्रवेत् परस्य तु कश्चिद् यदा कदा ॥



यौवन

४६

## (च) आमन्त्रणम्

[ लय—है मुकद्दर का सिकन्दर ··· ]

बन्धवो हे स्नेह-सिन्धव आकुलं नो मानसम् ।
कैर्वचोभिः कुर्म आमन्त्रण-कृते वः साहसम् ॥

विद्यया वयसा गुणैर्वा ज्यायसो विमलाशयान् ।
चारु-चरितान् कथमिवाऽऽपृच्छेमहि श्रेयःप्रियान् ॥

यूयमादर्शा भवन्तो नः सदा चरितैः सदा ।
सत्पथं सन्दर्श्य सन्तमसे प्रदीपत्वं गताः ॥

चिन्तयन्तो नैव पश्यामः प्रकारं बन्धवः ! ।
आधमर्ण्यं येन निष्क्रीतं करिष्यामो नु वः ॥

हेलया यत् किञ्चनागः स्यात् कृतं भो दुर्धिया ।
मन्दतां सञ्चिन्त्य नस्तन्मर्षयन्तु महाशयाः ! ॥

विस्मरेत तु नैव कृत्येष्वाकुला दीनानिमान्
अर्थनेयं पश्चिमाऽस्माकं मनःस्वाधीयताम् ॥



४७

(छ)

## प्रत्यामन्त्रणम्

[ लय—तुम मेरा साथ देने का वादा करो मैं यों ही मस्त
नगमे लुटाता रहूं ]

शोकदा हा ! घटी साऽऽगतेयं यया
संहृतोऽसौ भवत्संगदः संविधिः ।
हर्तुमभ्युद्यतो दुर्लभं संनिधिं
मत्सरी नूनमस्मत्सुखेऽयं विधिः ॥

यैः समाः सार्धमुषितं तथा वल्गितं
क्वाऽपि हसितं क्वचिच्चाऽपि कलहायितम् ।
हा ! चिरं नैव तेषां पुनर्दर्शनं—
लप्स्यते, हन्त ! कोऽयं नियत्या विधिः ॥

विस्मृतास्तास्तु घटचः कथं स्युः सुखा
यासु संभूय गोष्ठी-सुखं संभृतम् ।
संस्मृता हा भविष्यन्ति दुःखाः परं
हन्त ! ता एव कोऽयं तु वामो विधिः ! ॥

ज्ञानतोऽज्ञानतो वा यदाऽऽगस्कृतं—
युष्मदीयं, सखायो न तन्मृष्यताम् ।
संस्मृतिं तेन हेतोर्गतश्चेत् क्षणं
दूरगस्याऽपि मे स्यादयं शेवधिः ॥
शोकदा हा ! घटी साऽऽगतेयं यया
संहृतोऽसौ भवत्संगदः संविधिः ॥'



४८

## (ज) कालिदास-जयन्त्यभिनन्दनम्

जय कालिदास ! जय हे ! जीयादियं जयन्ती।
लोके ललामभूता तव कीर्तिवैजयन्ती ।।
पीयूष-यूष-सारा वाणी सुहारिणी ते ।
कं नाऽऽशु मोदमग्नं विदधीत चारुगीते ? ।।
प्राणप्रदा जनानां चेतांसि रञ्जयन्ती
जय कालिदास जय हे ! जीयादियं जयन्ती ।।

पुण्या रसालशब्दा वरभावनाभिरामा,
कविता तवानवद्या नित्यं नवेव वामा ।
रम्या सुभावुकानां रागं समर्धयन्ती
जय कालिदास जय हे ··· ··· ···

शृङ्गार-साधु-गीते ! वर-कल्पना-खगी ते
पुण्यानुराग-हेतोः स्वर्गं समुज्जिहीते ।
भोगं तपोऽभिरम्यं योगं प्रदर्शयन्ती
जय कालिदास जय हे ··· ··· ···

ऋतुराज-राजमानारसराजसाधुगाना,
रचना शकुन्तलेव त्रिदिवं समुज्जिहाना ;
विहगीव कल्पना वा चित्तं प्रसादयन्ती
जय कालिदास ! जय हे ! ··· ···



४९

(भैं)

## स्वागत-गीतम्

[ लय—सितारो ! फूल बरसाओ मेरा महबूब आया है ]

अहो सौभाग्यमस्माकं महाभागः समायातः ।।
सखायो व्याहरत भोः स्वागतं श्रीमानिहायातः ।।

स्थलीयं भाति पुलकैराचिता विष्वक् तृणाकारैः ।
प्रसादं नीरजस्का द्यौर्व्यनक्त्येषांशुसंचारैः ।
नियत्या मुक्त इव निश्वासवातो वात्यसौ वातः
अहो ! सौभाग्यमस्माकं महाभागः समायातः ।।

न गाधे मानसे नो माति मोदस्योद्गमस्त्वेषः ।
कथं वा शक्यते वोढुं गिराऽसौ भावनाऽऽवेशः ? ।
न सत्कारे मतिः स्फुरतीति कोऽसौ संभ्रमो जातः ?
अहो ! सौभाग्यमस्माकं महाभागः समायातः ।।

पदं भोः प्रावृतं नः पक्ष्मजालं लोचनद्वारे ।
हृदः सिंहासनं सज्जं प्रसन्नं मानसागारे ।
प्रमोदाश्रुप्रवाहश्चार्घ्यकल्पायायमुद्यातः ।।
सखायो व्याहरत भोः स्वागतं श्रीमानिहायातः ।।

न कामं श्रीमदनुरूपां सपर्यां शक्नुमः कर्तुम् ।
उदाराः किन्तु नैवार्हन्ति रोषं मानसे भर्तुम् ।
सुदर्शश्चन्द्रमा नित्यं नियत्या नैव पूजातः
अहो सौभाग्यमस्माकं महाभागः समायातः ।।



मुद्रावत

# लेखक-परिचय

**जन्म-वर्ष**—१९२४ ई०

**निवास-स्थान**—पौड़ी गढ़वाल (उत्तर प्रदेश) में पौड़ी के निकट डांग गाँव।

**पिता**—स्वर्गीय पं० हीरामणि, **माता**—स्व० कालिन्दी देवी।

**शिक्षा**—साहित्य शास्त्री (सं० विश्व विद्यालय, वाराणसी व पंजाब विश्वविद्यालय लाहौर), साहित्याचार्य (संस्कृत विश्वविद्यालय, वाराणसी), एम. ए., एम. ओ. एल्., पी-एच्. डी. (संस्कृत, पञ्जाब विश्वविद्यालय, चण्डीगढ़), साहित्यरत्न (हिन्दी विश्वविद्यालय, प्रयाग)। शोध-विषय—वाल्मीकि-रामायण काव्यशास्त्र का उपजीव्य।

**व्यवसाय**—अध्यापन-कार्य, आरम्भ में दिल्ली में अनेक संस्थाओं में हिन्दी एवं संस्कृत का अध्यापन। 1959 से विश्वेश्वरानन्द वैदिक शोध संस्थान, होशियारपुर में स्नातकोत्तर कक्षा (संस्कृत) का प्राध्यापन। 1965 से पञ्जाब विश्वविद्यालय के वैदिक केन्द्र विश्वेश्वरानन्द विश्वबन्धु संस्कृत व भारत-भारती अनुशीलन संस्थान, होशियारपुर में प्राध्यापक।

**रचनाएँ**—भारत-सन्देश काव्य (उत्तर प्रदेश शासन से पुरस्कृत), महावीर-चरितम् एक शतककाव्य; हूण-पराजयम्-संस्कृत नाटक (उत्तर प्रदेश संस्कृत अकादमी द्वारा पुरस्कृत), अभिनवरागगोविन्दम् गीतसङ्ग्रह; मायापतिः—प्रहसन, साक्षात्कारः भाण; अजेय-भारतम् व केसरिचंक्रमः दो संस्कृत रेडियोरूपक; संस्कृतनिबन्धमणिमाला (अब अप्राप्य) संस्कृत-निबन्ध-रत्नाकर उच्चकोटि के निबन्धों का संग्रह। न्यासः—संस्कृत कहानी; कालिदास-दर्शन, कालिदास की रचनाओं का आलोचनात्मक संग्रह (उत्तर प्रदेश से पुरस्कृत); कालिदास-दर्पण (मुद्रणाधीन)।

शतप्राय फुटकल कविता, शोध-पत्र व लेख पत्र-पत्रिकाओं व अभिनन्दन-ग्रन्थों में प्रकाशित; अनेक कृतियां प्रकाशन की प्रतीक्षा में।